# सूक्ति-मुक्तावली

---

'पुराणमित्येव न साधु सर्वं
नचापि चैतन्नवमित्यवद्यम् ।
सन्तः परीक्ष्या न्यतरद्भजन्ते ॥'

---

सङ्कलयिता

**रामचन्द्रमिश्रः**

महालक्ष्मी-ग्रन्थमालायाः प्रथमं प्रसूनम्

# सूक्तिमुक्तावली

सिवाननगरस्थरामेश्वरसंस्कृतविद्यालयप्रधानाध्यापकेन
मुजफ्फरपुरमण्डलान्तर्वर्तिपकड़ीग्रामवासिना
व्याकरणवेदान्तसाहित्याचार्याद्युपाधिप्रसाधिना

**प० रामचन्द्रमिश्रशर्मणा**

सङ्गृहीता, टिप्पण्यादिना परिष्कृताच ।

सं० १९९६ ] प्रथम संस्करण [ मूल्यम् ।=)

मुद्रक

अ० न० सिंह

साहित्य प्रेस, छपरा

पुस्तकप्राप्तिस्थाने

१–रामेश्वरसंस्कृतविद्यालयः, सिवान (सारन)

२–ग्रा० पकड़ी, पो० ढेंग, मुजफ्फरपुर

प्रकाशक

रामचन्द्रमिश्र

व्यवस्थापक

महालक्ष्मीग्रन्थमालाकार्यालयः

सिवान

# किञ्चित्प्रास्ताविकम्

श्रीमन्तः सुरसरस्वतीस्नेहसम्भृतस्वान्ताः,

जानन्त्येव भवन्तो, यदिह जगति याभाषा माधुर्यधुर्यतया समाद्रियते, भावाभिव्यक्तिशक्तिविशेषवत्तया पूज्यते, स्वल्पे शब्दगुम्फे महतोऽर्थराशेराश्रयतया प्रशस्यते, नवं नवं भाव मावेदयतां प्रास्ताविकवाक्स्तवकानां जन्मभूमितया भूरिप्रमावभाजनत्वं भजते, सैव चिराय जनमनांसि समाकर्षति सुधारसंच वर्षति सर्वेपीमे गुणाः संस्कृते सङ्गीभूय सन्तीतिकृत्वैव देवभाषापदेऽभ्यषिच्यत संस्कृतम् इति। किञ्च कस्यांचिदपि भाषायां विनिबद्धं किमपि शास्त्रं निषेवमाणेन स्वाभिप्रायप्रकाशनावसरे तद्भाषया व्यवहर्त्तुमेवोचितं भवति, तत्रच व्यवहारे चमत्कारस्तावदलभ्यएव यावदुच्चावचाभिप्रायबोधिका स्तद्भाषासूक्तय ससाधु न स्वान्त संबद्धास्स्युः, प्रकरणपूरकाः प्राचीनपद्यतदंशाश्च न परिशीलिताः स्युः, तद्भाषानुस्यूता न्यायाश्च न निपुणं निरूढसौहृदाः स्युः, तत्रापि प्रचुरप्रचारा स्समासादितस्नेहसम्भाराः संक्षिप्तवह्वर्थतया दार्शनिकैः, कविभी, रीति निर्मातृभिः,—किंवहुना—वैयाकरणैरपि स्वेषु निबन्धेषु व्यवहृताः सूक्तयोहि यथास्थानमुपन्यस्ताः भाषास्रजि सुमेरुवदुद्योतमानाः प्रकरणपर्यवसेयमर्थं चमत्कृत्य बोद्धव्यानामन्त रन्तारत–विषयान्तर सम्पर्क मानन्दथुं प्रथयन्ति

संस्कृतमजानतामपि समवाये परयापि भाषया व्यवहारे समुद्धृताः संस्कृत-संदृब्धाः सुभाषितावलयः समधिकां भाषाशोभां पुष्यन्ति, प्रमापितञ्चेदं पण्डितपद्मसिंहशर्मप्रभृति—महाशयानां प्रथितैः प्रबन्धैः, सेवताद्धि सूक्ति कामदुघा प्रतिपादनशैलीं परिष्कृत्य भाषाप्रौढभावं सेवकानां मानसिकीमुन्न-तिंच विधास्यति । इतिच ।

हेतुभिरेभिः संस्कृतसाहित्यमहातरुशाखासु व्यस्ततया स्थितानां सूक्तिसुमानां संक्षिप्यापि संग्रहो यद्येकत्र कृतो भवेन्नूनमबहुविद्यानामपि जनानां संसारस्तत्सौरभभावितः स्यादिति विचारश्चिरान्मच्चेतश्चत्वरे भ्रमतिस्म—अतः सम्प्रति विद्यामन्दिरे नवागन्तुकानां सहृदयानां पुरो दर्पणे सिंहस्येव संस्कृतसाहित्यैकदेशस्वरूपकतिपयपुस्तक—समवस्थितासकल सूक्तिसमुदयस्यात्र लघीयश्शरीरे संग्रहे निदर्शनं कारयितुं व्यवसितवानस्मि । साफल्यसम्भावनायास्तु लेशोपिनास्ति, यदस्तु । एषच संग्रहो मया निम्नाङ्किता अनुपपत्ती राकलय्यैव प्रारब्ध इति ता अत्रानभिधाय न प्रभवामि पुरस्सर्तुम् । प्राचीनेषु संग्रहेषु केवल पद्यान तदंशा एवच समग्राहिषत तत्रापि केवलं वर्णनपराणां वाक्यानां सकलविधान्योक्ति-मुक्तांनाञ्चैव भूयस्तयाभ्यर्हणा जाता, बहुकालप्रचलितपथानुसारेण शृङ्गाररसस्य कृता समधिका सपर्या, कतिपयग्रन्थानां कतिचन प्रकरणान्येक-क्रमेणैवोद्धृत्यापेक्षितानपेक्षितभावं चाविभाव्याकारणमेव तुन्दिलीकृतः पुस्तकस्य कायः, काव्यान्तर्गडुभूतानां दृष्टकूटप्रहेलिकादीनां राशीकरणे प्रदर्शितो महान् संरम्भः, न ध्याता केनापि वराकी गद्यावली, नानीता बुद्धिवर्त्म पाठकानां मानसिकी समुन्नतिः, न चिन्तितः समयसदुपयोगः, नापि चेतसाऽऽचान्तोपि सर्वैरसुवहो व्ययबाहुल्यभारः, विशेषतश्छात्राणां

कृतेषु केनापि नाध्यायि। नैनावता नाहं ताम्बहु मन्ये, श्रद्धया नत एव मे मौलि र्यानोपनीततत्पदपाथोजन्मसु, यत्कृपोपज्ञेयं संग्रह-प्रवृत्ति यर्दनुवृत्ति र्ममापि तोषाय ।

मया त्वत्र संग्रहे विदुषां तोषं स्वस्य श्रमेणासाध्यं साधु सम्भाव्य केवलं छात्राणां साहित्यिकं साहाय्यमेवोद्देश्यं मनसि निधाय न कदर्थितैव वर्णनावली, न स्पृष्टाएव शृङ्गाररसोपबृंहिताः साधीयस्योऽपि सूक्तयः, अकषायितेहि वयसि सातिशय मात्मन्यासङ्गं समुज्जृम्भयेयुः शृङ्गारसम्पुटा वाक्प्रसराः। लघुकायतया सदासहचरत्वयोग्यताम्, क्लेशलेशमपि विनैव पारायणम्, व्ययलाघवम्, सारल्यप्राचुर्यञ्चानुपेच्यलक्ष्यं कृत्वैव कृतात्र संग्रहविधौ प्रवृत्तिः।

तेन किमह मीशे कर्त्तु मीदृशीमाशाम्, यन्मनीषिणोपि सकृदपि दृक्पातेन पूतं विधाय संग्रह मिम मुपयोगिनं मन्यमानाः स्वीयानन्ते-वसतोऽस्य संग्रहाय स्वाध्यायायच सनिर्बन्ध मनुरोत्स्यन्ति। छात्रबन्धवस्तु विशेषतो सदाशालम्बनान, येषां कृते सारस्वते साम्राज्येऽनधिकृतोऽपि प्रभविष्णुमतिता मनाप्तवानपि वहुस्कन्धेषु शास्त्रेपूत्कटाभिलाषवात्यय। नीयमान इव प्रवलोत्कताऽऽविश्यमान इवास्य सम्पादने प्रकाशनेच प्रवृत्तएव संवृत्तोस्मि यदिच तेऽस्य परिशीलनेन स्वां वाचं परिष्कर्त्तुं चेतसः स्फीत-स्फारतां सम्पाद्य जीवनसंग्रामे दृढ़पदन्यास मग्रेसर्त्तुं च यतिष्यन्ते तदैवाहं स्वं परिश्रमं सार्थकं मन्ताहे। तथास्तु।

यदीयं मदीया कृति रभविष्यत्तदातु—

'वाणी ममैव सरसा यदि रञ्जयित्री; न प्रार्थये रसविदा मवधानदानम्, इत्युक्त्वैव कृतार्थता माकलयिष्यम्; परंसम्प्रतितु परकीयकृतीना मुपन्यासस्यावसरेः—

'यद्यस्ति वस्तु किमपीह तथानवद्यं, द्योतेत तत् स्वय मुदेष्यति चानुरागः । नोचे दलं कृतकवाग्भि, रलं प्रपन्चै–र्निर्दोहधेनुमहिमा नहि किङ्किणीभिः' इति श्रीमतः शालग्राम शास्त्रिणः पद्यमेवाभिधाय विरमामि ।

अत्र प्रकरणविभागश्च मया कृतो यथा— १ सूक्तिप्रशस्तिः २ मङ्गलाचरणम् ३ सूक्तिरत्नावली ४ सुभाषित-गद्यावली ५ सुभाषित-पद्यांशावली ६ अन्योक्तिमणिमाला इति क्रमस्थापनेच केवलमकारादि-क्रमएव मयाऽऽदृतः । सूक्तिगङ्गा-हिमवतां ग्रन्थ नां तदाचार्याणाञ्च नामानि निर्दिशन्तं मा मियं भगवती सूक्तिरेव न्यवारयत्:—

'ननु वक्तृविशेष–निःस्पृहा, गुणगृह्या वचने विपश्चितः'

एतस्य सम्पादने प्राचां संग्रहकृतामुपकारो न मया कदापि विस्मर्त्तव्या, बिशेषतः सुभाषितादि समन्वित 'प्रबन्धप्रकाश' कृतां श्री मङ्गलदेवशास्त्रि महोदयानां, यदीयप्रबन्धस्यान्तिम मध्याय मवलोक्यैवात्र कृतो मया परिकरः । उपयुक्त पुस्तकादि प्रदानेन कृतसाहायका स्सर्वेऽपि सखाय-स्सकृदिह स्मृति पात्रतां नीयमाना मया न नामग्राह मिष्यन्ते निदष्टुं केवलं नतेन शिरसाऽऽभारं विभर्मि तेषाम् ।

परगुण–परमाणून् पर्वतीकृत्य विकसतां सतां नित्यक्षमामयतया, दोषैकदृशा मसतां तु पुरः क्षमाप्रार्थनाव्यापारस्यापि स्वप्रवञ्चनामात्र-सारतया क्षमा-प्रार्थना मन्तरैव समापयामि स्वीयं प्रास्ताविकम् । आशासे यदीम माद्दत्य संग्रहमहमनुगृह्णात. सुधीभिरन्तेवासिभिश्च तदानतिचिरेणैव द्वितीय मुपायन मादाय तेषा मन्तिक मागन्तास्मि ।

शमिति ।

१९९६, श्रावणी पूर्णिमा
सीवान

विदुषामाश्रवो ——
**रामचन्द्र मिश्रः**

# 'प्रार्थनापञ्चकम्'

'विश्वानि देव सवितर्दुरितानि परासुव,
यद्भद्रं तन्न आसुव'

× × ×

'बल मसि बलं मयि धेहि', 'तेजोसि तेजो मयि धेहि',
'अमृतमस्यमृतं मयि धेहि' ॥

× × ×

सहनाववतु, सहनौ भुनक्तु, सह वीर्यं करवावहै,
तेजस्विना वधीतमस्तु, मा विद्विषावहै' ॥

× × ×

'असतो मा सद्गमय, तमसो मा ज्योति र्गमय,
मृत्यो र्माऽमृतं गमय' ॥

× × ×

'यो देवानां प्रभवश्चोद्भवश्च,
विश्वाधिपो रुद्रो महर्षिः ।
हिरण्य-गर्भं पश्यति जायमानं
सनो बुद्ध्या शुभया संयुनक्त' ॥

# 'मङ्गलाचरणम्'

'अन्तरायतिमिरोपशान्तये, शान्त-पावन मचिन्त्यवैभवम् ।
तन्नरं वपुषि, कुञ्जरं मुखे, मन्महे किमपि तुन्दिलं महः' ॥

× ×

'वचांसि वाचस्पतिमत्सरेण, साराणि लब्धुं ग्रहमण्डलीव ।
मुक्ताक्षसूत्रत्वं मुपैति यस्याः, सा सप्रसादास्तु सरस्वती नः, ॥

× ×

'श्याम-तामरस-दाम-सुन्दरः, पादपङ्कजनमत्पुरन्दरः ।
वर्द्धमान-भवदाव-पावकः, पातु कोपि वसुदेव-शावकः' ॥

× ×

'शुक-तुण्डच्छवि सवितु श्चण्डरुचः पुण्डरीकवनबन्धोः ।
मण्डल मुदितं वन्दे कुण्डल माखण्डलाशायाः' ॥

× ×

"विद्या विद्यत एव यत्र सततं, वेद्यान यो रागिणां,
यं वैद्यं मनसा प्रपद्य विषयव्यालेष्वभाका बुधाः ।
वेदाशेष–विचारसीमविलसत्सिद्धान्तभूमिः स मे
विद्युत्य द्यतुहृद्यवद्यमखिलं श्रीवैद्यनाथः शिवः" ॥

---

पण्डितराजेन 'न परस्य किञ्चित्' इत्युक्तौ यावानात्मसन्तोषः समधिगतो, मयापि मङ्गलाचरणादासमाप्ति न निजस्य किञ्चिदिति ब्रुवाणेन तावानेवासादितो मनोमोदः । अन्तरं केवलं सहृदय-संवेद्यम् ।

# सूक्ति-प्रशस्तिः

सर्वत्र श्रूयते सूक्तिः

× ×

'भाषासु मुख्या मधुरा दिव्या गीर्वाण-भारती ।
तस्माद्धि काव्यं मधुरं तस्मादपि सुभाषितम्' ॥

× ×

'सुभाषितमयद्रव्य-संग्रहं न करोति यः ।
स तु प्रस्ताव–यज्ञेषु कां प्रदास्यति दक्षिणाम्' ॥

× ×

'सुभाषितं हारि विशत्यधो गला-
न्न दुर्जनस्यार्करिपोरिवामृतम् ।
तदेव धत्ते हृदयेन सज्जनो-
हरि र्महारत्नमिवातिनिर्मलम्' ॥

× ×

'या दुग्धापि नदुग्धेव कविदोग्धृभि रन्वहम् ।
हृदि नः सन्निधत्तां सा सूक्तिधेनुः सरस्वती' ॥

# सूक्ति-रत्नावली

'अष्टादश-पुराणेषु व्यासस्य वचनद्वयम् ।
'परोपकारः पुण्याय' 'पापाय परपीड़नम्' ॥

× ×

'अतिदाक्षिण्य[1]-युक्तानां शङ्कितानां पदे पदे ।
परापवादभीरूणां दूरतो यान्ति सम्पदः' ॥

× ×

[2]'अवज्ञास्फुटितं प्रेम समीकर्त्तुं क ईश्वरः ।
सन्धिं नयाति स्फुटितं लाक्षालेपेन मौक्तिकम्' ॥

---

१ शीलम् । २ तिरस्कारः ।

'अकृत्वा परसन्ताप मगत्वा खलमन्दिरम्[1] ।
'अनुत्सृज्य सतां वर्त्म यत्स्वल्पमपि तद्बहु' ॥

× ×

'अहेतुः पक्षपातो य स्तस्य नास्तिप्रतिक्रिया ।
सहि स्नेहात्मक स्तन्तु रन्तर्मर्माणि सीव्यति' ॥

× ×

'अद्यापि दुर्निवारं स्तुति-कन्या वहति कौमारम् ।
सद्भ्यो नरोचतेसाऽसन्तस्तस्यै नरोचन्ते' ॥

× ×

अतिपरिचया दवज्ञा सन्ततगमना दनादरो भवति ।
लोकः प्रयागवासी कूपे स्नानं समाचरति' ॥

× ×

अमुना मरुकूपेन के के नाम न वञ्चिताः ।
रुदत्पथिकनेत्राम्बु-पिच्छिल-प्रान्तभूमिना ॥

× ×

'अध्वन्यध्वनि तरवः पथि पथि पथिकै रुपास्यते च्छाया ।
विरलः सकोपि विटपो[2] यमध्वगो गृहगतःस्मरति' ॥

× ×

'अमितगुणोपि पदार्थो दोषेणैकेन निन्दितो भवति ।
सकलरसायनराजो गन्धेनैकेन लशुन इव' ॥

---

१ अत्यक्त्वा । २ वृक्षः ।

'अङ्गण-वेदी वसुधा, कुल्या[1] जलधिः, स्थली च पातालम् ।
वल्मीकश्च[2] सुमेरुः, कृतप्रतिज्ञस्य धीरस्य' ॥

× ×

'आत्मायत्ते गुणग्रामे नैर्गुण्यं वचनीयता[3] ।
दैवायत्तेषु वित्तेषु पुंसां का नाम वाच्यता' ॥

× ×

'आत्माधीनशरीराणां स्वपतां निद्रया स्वया ।
कदन्नमपि मर्त्याना ममृतत्त्वाय कल्पते' ॥

× ×

'आपद्गतः खलु महाशयचक्रवर्त्ती
विस्तारय त्यक्त पूर्वमुदारभावम् ।
कालागुरु र्दहनमध्यगतः समन्ता—
ल्लोकोत्तरं परिमलं प्रकटीकरोति' ॥

× ×

'आयुषः क्षणएकोपि न लभ्यः स्वर्णकोटिभिः ।
स चे द्विफलतां नीतः का नु हानि रिताधिका' ॥

× ×

'आश्रयवशेन सततं गुरुता लघुता च जायते जन्तोः ।
बिन्ध्ये बिन्ध्यसमानाः करिणो बत दर्पणे लघवः' ॥

---

१ कृत्रिमाल्पासरित्- (नहर इति भाषा) । २ उन्नतभूमि विशेषः
३ निन्दा ।

'इयमुन्नतसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया' ॥

× ×

'इहरूपमात्रसारे चित्रगते कनककह्लारे[1] ।
नरसो नापिचगन्धो मधुकर बन्धो ! मुधाभ्रमसि' ॥

× ×

'उद्घाटितनवद्वारे पञ्जरे विहगोऽनिलः[2] ।
यत्तिष्ठति तदाश्चर्यं प्रयाणे विस्मयः कुतः' ॥

× ×

'उपचारः[3] कर्त्तव्यो यावदनुत्पन्नसौहृदाः पुरुषाः ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति' ॥

× ×

'एकोह मसहायोहं कृशोह मपरिच्छिदः[4] ।
स्वप्नेप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते' ॥

× ×

'काहि पुङ्गणनातेषां येन्यशिक्षा-विचक्षणाः[४] ।
येस्वं शिक्षयितुं शक्ता स्तेषां पुङ्गणना नृणाम्' ॥

× ×

'कल्याणी वत गाथेयं लौकिकी प्रतिभातिमे ।
'एति जीवन्तमानन्दो नरं वर्षशतादपि' ॥

---

१ कमले । २ प्राणवायुः । ३ सत्कारादि शिष्टाचारः । ४ पण्डिताः ।

'कल्पद्रुमोपि कालेन भवेद्यदि फलप्रदः ।
कोविशेषस्तदा तत्र वन्यैरन्यै महीरुहैः'[१] ॥

× ×

'कल्लोलवेल्लितदृषत्परुषप्रहारैः[२]—
रत्नान्यमूनि मकरालय[३] मावमंस्थाः ।
किङ्कौस्तुभेन भवतो विदधे न नाम
याच्ञा प्रसारितकरः पुरुषोत्तमोपि'[४] ॥

× ×

'कर्पूरधूलीरचितालवालः[५]
कस्तूरिकापङ्कनिमग्ननालः ।
सुवर्ण कुम्भैः सुधयावसिक्तः
प्राञ्चं गुणं मुञ्चति किं पलाण्डुः' ॥

× ×

किंशुके शुक मातिष्ट चिरं भाविफलेच्छया ।
वाह्यरङ्गप्रसङ्गेन के के नानेन वञ्चिताः ? ॥

× ×

'कुसुमस्तवकस्येव[६] द्वेगतीस्तो मनस्विनाम् ।
सर्वेषां मूर्ध्निवा तिष्ठे द्विशीर्येत[७] वनेऽथवा' ॥

---

१ वृक्षैः । २ तरङ्गचलित शिलाकठोराघातैः । ३ सागर । ४ विष्णुः ।
५ पयोदानाय निर्मितोवृक्षसमीपस्थोगर्त्त वि.षेषः । ६ गुच्छस्य । ७ नश्येत् ।

'खलः करोति दुर्वृत्तं नूनं पतति साधुषु ।
रावणेन हृता सीता बन्धनं स्यान्महोदधेः' ॥

× ×

'खलः सर्षपमात्राणि परच्छिद्राणि पश्यति ।
आत्मनो विल्वमात्राणि पश्यन्नपिन पश्यति' ॥

× ×

'गुणा गुणज्ञेषु गुणाभवन्ति
ते निर्गुणं प्राप्य भवन्तिदोषाः ।
आस्वाद्यतोयाः[1] प्रवहन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥

× ×

'चलन्तु गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रे पि[2] न चलत्येव धीराणां निश्चितं मनः' ॥

× ×

'जन्मेदं वन्ध्यतां नीतं भवभोगोपलिप्सया ।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया' ॥

× ×

'तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते' ॥

---

१ मधुरजलाः । २ कष्टेऽपि ।

'धनेषु जीवितव्येषु स्त्रीषु भोजनवृत्तिषु ।
अतृप्ता मानवाः सर्वे याता यास्यन्ति यान्तिच' ॥

+ +

'नास्त्यचौरः कविजनो नास्त्यचौरो वणिग्जनः ।
सनन्दति विनावाच्यं[1] योजानाति निगूहितुम्' ॥

+ +

'नात्यन्तं सरलै र्भाव्यं गत्वा पश्य वनस्थलीम् ।
छिद्यन्ते सरलास्तत्र कुब्जा[2] स्तिष्ठन्ति पादपाः' ॥

+ +

'नाधर्म श्चरितो लोके सद्यः फलति गौरिव ।
शनै रावर्त्तमानस्तु कर्त्तुर्मूलानि कृन्तति' ॥

+ +

'न द्विषन्ति न याचन्ते परनिन्दां न कुर्वते ।
अनाहूता[3] नचायान्ति तेनाश्मानोपि देवताः' ॥

+ +

'न ज्ञातुं नाप्यवज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते' ॥

---

१ निन्दाम् । २ वक्राः । ३ अनिमन्त्रिताः ।

'निजदोषावृतमनसा मतिसुन्दरमेव भाति विपरीतम् ।
पश्यति पित्तोपहत[1] शशिशुभ्र[1] शङ्खमपि पीतम्' ॥

\+ +

'नत्वहं कामये राज्यं नस्वर्गं नापुनर्भवम्[2] ।
कामये दुःखतप्तानां प्राणिनामार्त्तिनाशनम्' ॥

× ×

'प्रत्यक्षकविकाव्यञ्च रूपञ्च कुलयोषितः ।
गृहवैद्यस्य विद्याच कस्मैचिद्यदि रोचते' ॥

× ×

'प्रत्यहं समवेक्षेत नर श्चरित मात्मनः ।
किन्नु मे पशुभिस्तुल्यं किन्नु सत्पुरुषै रिति' ॥

× ×

'प्रतिकूलतामुपगतेहि विधौ, विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभून्न पतिष्यतः करसहस्रमपि' ॥

\+ +

'पुराण मित्येव न साधु सर्वं, नचापि काव्यं नव मित्यवद्यम्[3] ।
सन्तः परीक्ष्यान्यतरद्भजन्ते, मूढः परप्रत्ययनेय–बुद्धिः' ॥

---

१ एको नेत्ररोगो यस्मिन्हि सति सर्वमेव दृश्यमानं पीतिमानमिव भजत् प्रतीयते ।

१ चन्द्रवत् श्वेतम् । २ अपुनर्भवो मोक्षः । ३ निन्दनीयम् ।

पिबन्ति मधु पद्मेषु भृङ्गाः [1]केसरधूसराः ।
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम्' ॥

× ×

'परार्थे यः पीड़ामनुभवति भङ्गेपि मधुरो–
यदीयः सर्वेषामिहखलु विकारोप्यभिमतः ।
नसम्प्राप्तो वृद्धिं यदि स भृशमक्षेत्रपतितः–
किमिक्षोर्दोषोयं न पुनरगुणाया[2] मरुभुवः' ॥

+ ×

'व्रजत्यधः प्रयात्युच्चै र्नरः स्वैरेव चेष्टितैः ।
अधः कूपस्य खनक ऊर्द्ध्वं प्रासादकारकः' ॥

× ×

'भो दारिद्र्य नमस्तुभ्यं सिद्धोहं[3] त्वत्प्रसादतः ।
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन' ॥

× +

मरणं प्रकृतिः[4] शरीरिणां, विकृति[5] र्जीवित मुच्यते बुधैः ।
क्षणमप्यवतिष्ठते श्वसन्, यदिजन्तु र्ननु लाभवानसौ' ॥

× ×

'मनो मधुकरो मेघो मानिनी मदनो मरुत् ।
मा [6]मदो मर्कटो मत्स्यो मकारा दश चञ्चलाः' ॥

---

१ परागः । २ अनुर्वरया ऊषरया इत्यर्थः । ३ अञ्जनसिद्धिरत्र विवक्षिता यत्र तिरस्करणीशक्तिरपिनिष्पद्यते । ४ स्वभावः । ५ अस्वाभाविकता । ६ मा-लक्ष्मीः ।

'मुक्ताः कतिपयाः प्राप्य मातङ्गा मदविह्वलाः ।
रत्नैःपूरितस्यापि मदलेशोपि नाम्बुधेः' ॥

× ×

'यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोपि[१] सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोपि विमुञ्चति'[१] ॥

× ×

'यदि सन्ति गुणाः पुंसां विकसन्त्येव ते ध्रुवम् ।
नहि कस्तूरिकामोदः[२] शपथेन विभाव्यते' ॥

× ×

'यदीच्छसि वशीकर्त्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यश्चरन्तीं गां[३] निवारय' ॥

× ×

यदचेतनोपि पादैः स्पृष्टः प्रज्वलति सवितु रिनकान्तः[४] ।
तत्तेजस्वी पुरुषः परकृतनिकृतिं[५] कथं सहते' ॥

× ×

'युक्तोसि भुवनभारे मा बक्रां वितनु कन्धरां[६] शेष ।
त्वय्येकस्मिन् दुःखिनि सुखितानि भवन्ति भुवनानि' ॥

---

१ पक्षिणः । १ क्रमेण राम रावणावत्र निदर्शने । २ सौरभम् ।
३ इन्द्रियं धेनुञ्च । ४ सूर्यकान्त मणिः । ५ तिरस्कारम् । ६ ग्रीवाम् ।

'रविरपि न दहति ताद्दग्याद्दक्संदहति वालुकानिकरः ।
अन्यस्माल्लब्धपदो नीचः प्रायेण दुःसहो भवति' ॥

× ×

'लक्ष्मीवन्तो न जानन्ति प्रायेण . ादिनाम् ।
शेषे धराभराक्रान्ते[1] शेते नारायणः स्वयम्' ॥

+ ×

वदनं प्रसादसदनं, हृदयं सदयं, सुधामुचो वाचः ।
करणं परोपकरणं, येषां, केषां न ते वन्द्याः' ॥

× ×

'वंशभवो[2] गुणवानपि सङ्गविशेषेण पूज्यते पुरुषः ।
नहितुम्बीफलविकलो वीणादण्डः प्रयाति महिमानम्' ॥

× ×

'व्यतिषजति[3] पदार्थानान्तरः कोपिहेतु —
र्नखलु वहिरुपाधीन् प्रीतयः संश्रयन्ते ।
विकसतिहि [4]पतङ्गस्योदये पुण्डरीकं
द्रवति च [5]हिमरश्मा वुद्गते चन्द्रकान्तः' ॥

× ×

'शरीरनिरपेक्षस्य दक्षस्य व्यवसायिनः ।
वुद्धिप्रारब्धकार्यस्य नास्ति किञ्चन दुष्करम्' ॥

---

१ पृथ्वीभारव्याकुले । २ सत्कुलजातो, वेणु निर्मितश्च । ३ आकर्षति ।
४ सूर्यस्य । ५ चन्द्रे ।

सर्वे कुशलिनः सन्तु सर्वे सन्तु निरामयाः[1] ।
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ॥

× ×

'साधारणतरुबुद्ध्या न मया बद्धः स्तवालवालोऽपि ।
लज्जयसि मामिदानीं चम्पक भुवनाधिवासिभिः कुसुमैः' ॥

× ×

स्नेहो हि वरमघटितो न पुनः संजातविघटितः स्नेहः ।
हृतनयनो हि विषादी न विषादो भवति जात्यन्धः'[2] ॥

× ×

'संपदा सुस्थिरम्मन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्द्धयति तस्य ताम्' ॥

× ×

'सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च सत्यस्य वक्ता श्रोता च दुर्लभः' ॥

× +

'साक्षरा विपरीताश्चेद्राक्षसा एव केवलम् ।
सरसो विपरीतश्चेत्सरसत्वं न मुञ्चति' ॥

---

१ नीरोगाः । २ जन्मान्धः ।

# सुभाषितगद्यावली

'अप्रतिभस्य पदार्थसार्थः[1] परोक्ष इव, प्रतिभावतः पुनरपश्यतोपि प्रत्यक्ष इव'

अनियत-कालाः प्रवृत्तयो विप्लवन्ते'[2]

'अन्यदृष्टचरे ह्यर्थे महाकवयो जात्यंधा स्तद्विपरीते तु दिव्यदृशः'

'अतिदीप्तोपि खद्योतो न पावकः'

---

१ पदार्थसार्थः = वस्तुजातम् । २ नश्यन्ति ।

'अग्निदाहादपि विशिष्टं वाक्पारुष्यम्'

'अप्रियेण कृतं प्रियमपि द्वेष्यं भवति'

'अतिस्नेहः पापशङ्की'

'अनुत्सेकः'[१] खलु विक्रमालङ्कारः'

'अतिरोषण[२] श्चक्षुष्मान प्यन्धएवजनः'

'अतिद्रुत-वाहिनी चानित्यता-नदी'

'अहो दुर्निवारता व्यसनोपनिपातानाम्'

'अनतिक्रमणीया हि नियतिः'

'अवहितं हि चित्त मर्थान्तरं पश्यति'

'अभ्यासो हि कर्मणि कौशल मादधाति, नहि सकृन्निपात-मात्रेणोदबिन्दुरपि ग्रावणि[३] निम्नता मादधाति'

---

१ अगर्वः । २ अतिक्रोधी । ३ प्रस्तरे ।

'अनिषिद्धं ह्यनुमतं भवति'

—————

'आत्मानमेव प्रतिहन्त्यनात्मवतां कोपः'

'आयसै रायस श्छेद्यः'

'आत्मान मात्मना नवसाद्य[2] वोद्धरन्ति सन्तः'

आवेदयन्ति हि प्रत्यासन्न मानन्द मग्रपातीनि शुभानि निमित्तानि'

'आजन्म क्रमाहितो बलवान् जननीस्नेहः"

'आप्तादपि हि विकत्थमाना[3] दत्यर्थ मुद्विजन्ति लोकाः'



१ अबलानाम्। २ अलघूकृत्य। ३ स्वप्रशंसिनः।

'इह जगति हि न [1]निरीहदेहिनं श्रियः संश्रयन्ते'

'उपयोगंतु न प्रीतिर्विचारयति'

'उद्यमेन हि सिद्ध्यन्ति क्रिया, नेच्छया केवलया'

'एरण्ड मवलम्ब्य कुञ्जरं[2] न कोपयेत्'

'एकार्थं हि क्रिया-द्वयं द्वैगुण्याय संपद्यते'

'क्षीरार्थिनः किं करिण्या'

'छिन्नवन्धे मत्स्ये पलायिते निर्विण्णो[3] धीवरो भणति-र्मा मे भविष्यतीति'

'जलबुद्बुद-समाना विराजमाना सम्पत्तडिल्लतेव[4] सहसैवोदेति नश्यतिच'

'दर्पलवोऽपि सर्वसंस्कारानुच्छिनत्ति'

---

१ अनुद्योगी । २ हस्तिनम् । ३ उदासीनः । ४ विद्युल्लता ।

'द्विबद्धं सुबद्धं भवति'

× ×

'नह्यप्रवर्तितप्रदीपा स्तत्त्वार्थसार्थ [1]मध्यक्षयन्ति'

× ×

'न त्वरितस्य नक्षत्रपरीक्षा'

× ×

'नाग्नि मिच्छता धूमस्त्यज्यते'

+ ×

'न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति'

× ×

'नास्त्य गति र्मनोरथानाम्'

× ×

'नह्य ल मति-निपुणोपि पुरुषो नियति-र्लिखितां लेखा मतिक्रमितुम्'

× ×

'नहि खलु साध्यं नाम भगवतो [2]मनोभुवः'

× ×

'नहि शक्यं दैव मन्यथा-कर्त्तु [3]मभियुक्तेनापि'

× ×

नच स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु [4]निबध्नन्ति बन्धु-बुद्धि मभियुक्ताः

---

१ पश्यन्ति । २ कामस्य । ३ कुशलेनापि । ४ कुर्वन्ति ।

'नहि [1]कठोरकण्ठीरवस्य [2]कुरङ्गशावः प्रतिभटो भवति'

× ×

'नहि भवति [3]तरक्षुः प्रतिपक्षो हरिणशावस्य'

× ×

'नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, नवा मृगाः सन्तीति यवा [4]नोप्यन्ते'

+ +

'नहि वरविघाताय कन्योद्वाह्यते'

× ×

'नह्यागमाः सहस्रमपि घटं पटयितु मीशते'

+ ×

'नह्यतः पापात् पापीयोऽस्ति [5]यदनुपकरणस्य दीर्घमायुः'

+ ×

न चन्द्रा दातपो भवति

× ×

'नैष स्थाणो रपराधो यदेन मन्धो नपश्यति'

× ×

'नित्यं ह्यविज्ञातु [6]र्विज्ञानेऽभ्यसूया'

× ×

'नहि [1]कतकं पयसइव पङ्कस्य प्रसादनाय प्रभवति'



---

१ सिंहस्य । २ मृगशिशुः । ३ सिंहः । ४ यवानांवपनं न भवति ।
५ सामग्रीरहितस्य, निर्धनस्येतिभावः । ६ दोसदृष्टिः ।
१ अम्बुप्रसाद, इति पर्यायान्तरं-'निर्मली' तिभाषा ।

'पुत्रात् पराजयो द्वितीयं पुत्रजन्म'

× ×

'प्रायः प्राणभृतां प्रेमाण मन्तरेण नान्य द्वन्धनमस्ति'

\+ ×

'परगुण–वाचंय[1]मस्य मत्सरिणस्तु प्रतिभात मपि न प्रतिभातम्'

× ×

'पक्षपातो हि गुणदोषौ [2]विपर्यासयति'

× ×

'प्रायः समानविद्याः परस्परयशः [3]पुरोभागाः'

× ×

'भक्षितेपि लशुने न शान्तो व्याधिः'

× ×

'भुजे वीर्यं निवसति न वाचि'

× ×

'मिथ्यापि तत्तथा यथा गृहीतं लोकेन'

× ×

"मारणाय गृहीतो ऽङ्गच्छेदं स्वीकरोति"

✓ ×

'यादृशाकार श्चित्रकार स्तादृश मस्य चित्रम्'

---

१ मौनस्य। २ विपरीतं करोति । ३ दोषमात्रदर्शिनः ।

'यः संसदि[1] परदोषं वक्ति स स्वदोषबहुत्वं ख्यापयति'

+ ×

'यवागूरपि प्राणधारणं करोति काले'

× ×

यदेव किञ्चनानूचानो[2] ऽभ्यूहत्यार्षं[3] तद्भवति'

× ×

लुब्धसेवी पावकेच्छया खद्योतं धमति[4]'

× ×

बहुभाषिणो न श्रद्धधाति लोकः'

× ×

[5]'विभ्रमभ्रंशश्च निःश्रेयसं सन्निधत्ते'

× ×

'विषयान्तरविनिवृत्तं हि चित्तं यत्र प्रणिधीयते, तत्र गुडूचीलागं लगति'

× ×

'वृश्चिकभिया पलायमानस्याशीवि[6]षमुखे विनिपातः'

× ×

'सर्वनाशे समुत्पन्ने त्यजत्यर्धं विचक्षणः'

× +

'स पुन रमत्सरी ज्ञाताच विरलः'

---

१ सभायाम्। २ वेदाभ्यासी। ३ चिन्तयति। ४ फूत्करोति।
५ अज्ञानविनाशः। ६ सर्पः।

'स्वस्वविषये सर्वो गरीयान्, नहिराजहंसश्चन्द्रिकापानाय प्रभवति नापि चकोरोऽद्भ्यः क्षीरोद्धरणाय'

× ×

'संस्कारो हि सर्वस्य गुणमुत्कर्षति, द्वादशवर्णमपि सुवर्णं पावक-पाकेन हेमीभवति'

× ×

संस्कारो ह्यात्मनि समवैति, नस्त्रैणं पौरुषं वा विभाग मपेक्षते'

× ×

'सारस्वतं हिचक्षुरवाङ्मनसगोचरेणदृष्ट मदृष्टं चार्थ जातं स्वयं विभजति'

+ +

'सुसंस्कृतोऽपि [1]पिचुमर्दो न सहकारः'

× ×

'स्वहस्तोऽपि विषदिग्ध श्छेद्यः'

× ×

'स्वजनावमानो हि मनस्विनां दुःख मावहति'

× ×

'सर्वः कान्त मात्मीयं पश्यति'

× ×

'स्निग्धजनसंविभक्तं हि दुःखं सह्यवदनं भवति'

---

१ निम्बः ।

'सतां हि प्रियंवदता कुलविद्या'

× ×

सोयं कुरङ्गकैः [1]कचग्रहः केसरिणः

+ +

'स्थायिनि यशसि शरीरधी धीराणाम्'

× +

'सर्वथा न कश्चन न स्पृशन्ति शरीरधर्माण मुपतापः'

× ×

'सर्वथा दुर्लभं यौवन मस्खलितम्'

× ×

'सत्योयं लोकसंवादो–यत्संपत्संपदं विपद्विपद मनुवध्नातोति'

× ×

'सुखमुपदिश्यते परस्य'

+ +

'स्नेहश्च निमित्त[2]सव्यपेक्षश्चेति [3]विप्रतिषिद्धमेतत्'

× ×

'सेय माकृति र्न व्यभिचरति शीलम्'

+ +

'हरिणार्थमातिह्रेपण[4]: सिंहसम्भार



१ केशग्रहः । २ सहेतुकः । ३ विरुद्धम् । ४ लज्जाजनकः ।

# 'सुभाषितपद्यांशावली'

'अपथे पद मर्पयन्ति हि श्रुतवन्तोऽपि रजो-निमीलिताः'

\+ +

'अपि स्वदेहात् किमुतेन्द्रियार्था द्यशोधनानां हि यशो गरीयः

× +

'अभितप्त [1]मयोऽपि मार्दवं, भजते कैव कथा शरीरिषु'

\+ +

'अलोक-सामान्य मचिन्त्यहेतुकं, द्विषन्ति मन्दा श्चरितं महात्मनाम्'

× ×

'अयथावल मारम्भो निदानं क्षयसम्पदः'

---

१ अयः–लौहम्।

'अस्तसमयेपि सतामुचितं खलूच्चतरमेव पदम्'

× +

'अपां हि तृप्ताय न वारिधारा
स्वादुः सुगन्धिः स्वदते तुषारा'

× ×

'अदोषतामेव सतां विवृण्वतेऽ, सतां मृषा दोषकणाधिरोपणाः'

× ×

'अवश्यभव्येष्वनवग्रहग्रहा, यया दिशा धावति वेधसः[1] स्पृहा ।
तृणेन वात्येव तया नुगम्यते, जनस्य चित्तेन भृशावभृशात्मना' ॥

× ×

'अनुहुङ्कुरुते घनध्वनिं, नहिगोमायुरुतानि केसरी'

× ×

'अन्धस्य किं हस्ततलस्थितोपि, प्रकाशय त्यर्थ मिह प्रदीपः'

× ×

'अल्पानामपिवस्तूनां संहतिः कार्यसाधिका'

× ×

'अशेषदोषदुष्टोऽपि कायः कस्यनवल्लभः'

× ×

'अकाण्डपातोपनता न कं लक्ष्मी विमोहयेत्'

---

यथा हि तृणं वात्यामनुसरति तथैव विधातुरिच्छां विवशंलोकस्य चित्तमनुसरति, यद्विधातेच्छति तदनुकूलमेव व्यापारं कर्त्तुं लोकानीरयतीति तात्पर्यमस्यश्लोकस्य ।

१ प्रियः ।

'अचिन्त्यो यत दैवेना प्यापातः सुखदुःखयो.'

× ×

'अप्राप्यं नाम नेहास्ति धीरस्य व्यवसायिनः'

× ×

'अश्नुते स हि कल्याणं व्यसने यो न मुह्यति'

× ×

'अहो दैवाभिशप्तानां प्राप्तो प्यर्थः पलायते'

× ×

'अरक्षितं तिष्ठति दैव-रक्षितं, सुरक्षितं दैवहतं विनश्यति'

× ×

'अप्रकटीकृतशक्तिः शक्तोऽपि जन स्तिर-क्रियां लभते'

× ×

'अकृतो-पद्रवः कश्चि न्महानपि न पूज्यते'

× ×

'अशक्ता स्तत्पदं गन्तुं ततो निन्दां प्रकुर्वते'

× ×

'अर्के[1] चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्'

× ×

अशक्तोहं गृहारम्भे शक्तोहं गृहभञ्जने'

× ×

अगच्छन् [2]वैनतेयोऽपि पद मेकं न गच्छति'

---

१ गृहकोणे । २ गरुड़ोऽपि ।

'अङ्कमारुह्य सुप्तानां हन्तुः किन्नाम पौरुषम्'

× ×

'अपि धन्वन्तरि वैद्यः किङ्करोति गतायुषि'

× ×

'अप्य प्रसिद्धं यशसे हि पुंसा, मनन्यसाधारण मेव कर्म'

× ×

'अन्धस्ये वान्धलग्नस्य विनिपातः पदे पदे'

× ×

'[1]आपन्नार्त्तिप्रशमनफलाः सम्पदो ह्युत्तमानाम्'

× ×

'[2]आर्जवं हि कुटिलेषु न नीतिः'

× ×

आरब्धा ह्यसमाप्तैव कि न्धीरै स्त्यज्यते क्रिया'

× ×

'आत्मनः प्रतिकूलानि परेषां न समाचरेत्'

× ×

'आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि'

× ×

'आदानं हि [3]विसर्गाय सतां वारिमुचा मिव'

---

१ 'परोपकाराय सतां विभूतयः । २ सरलता । ३ त्यागाय ।

'[१]इन्धनौघधग प्यग्नि [२]स्त्विषा नात्येति पूषणम्'

× ×

'उदारचरितानां तु वसुधैव कुटुम्बकम्'

× ×

'उत्तरादुत्तरं वाक्यं वदतां सम्प्रजायते'

× ×

'उष्णत्व मग्न्यातप [३]संप्रयोगा च्छैत्यं हि यत्सा [९]प्रकृति र्जलस्य'

× ×

'[४]उपनत मवधीरयन्त्य भव्याः'

× ×

'उपाय मास्थितस्यापि नश्यन्त्यर्थाः [५]प्रमाद्यतः'

× ×

'[६]ऋते रवेः [७]क्षालयितुं क्षमेत कः क्षपा[८]तमस्काण्डमलीमसं नभः'

× ×

'क्रिया हि वस्तूपहिता [९]प्रसीदति'

× ×

'क ईप्सितार्थस्थिरनिश्चयं मनः, पयश्च निम्नाभिमुखं प्रतीपयेत्'

---

१ बहुकाष्ठदाहकः । २ कान्त्या । ३ संयोगात् । ४ प्राप्तम् । ५ असावधानस्य । ६ विना । ७ स्वच्छं सम्पादयितुम् । ८ रात्र्यन्धकारमलिनम् । ९ फलतीति तात्पर्यम् ।

'कस्या त्यन्तं सुख मुपनतं दुःखमेकान्ततो वा
नीचै र्गच्छ त्युपरि च दशा चक्रनेमिक्रमेण'

× ×

'क्षुद्रेपि नूनं शरणं प्रपन्ने ममत्व मुच्चैःशिरसां सतीव'

× ×

'कथापि खलु पापाना मल मश्रेयसे यतः'

× ×

'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः'

× ×

'कर्म कः स्वकृत मत्र न भुङ्क्ते'

× ×

'कार्यं [1]निदानाद्धि गुणानधी[2]ते'

× ×

'को नाम [3]पाकाभिमुखस्य जन्तो द्वाराणि दैवस्य पिधातु मीष्टे'

× ×

'[4]काचः काचो मणि र्मणिः'

× ×

'कोहि वित्तं रहस्यं वा स्त्रीषु शक्नोति गूहितुम्'

\+ +

'कष्टा हि कुटिलश्वश्रूपरतन्त्रवधूस्थितिः'

---

१ कारणात् । २ प्राप्नोति । ३ फलोन्मुखस्य । ४ क्रय-विक्रय वेलाया मितिशेषः ।

'[1]कदर्याणां परे प्राणाः प्रायेण ह्यर्थसञ्चयाः'

\+ +

'कामं व्यसनवृक्षस्य मूलं दुर्जनसङ्गतिः'

× ×

'केवलोपि [2]सुभगो नवाम्बुदः, किंपुन [3]स्त्रिदशचापलाञ्छितः'

× ×

'किन्तया क्रियते धेन्वायान सूते न दुग्धदा'

× ×

'खला विनैव दहनं दहन्ति जगतीतलम्'

× ×

'घनाम्बुना राजपथे हि पिच्छिले, क्वचिद्बुधैरप्यपथेन गम्यते'

× ×

'चकास्ति योग्येन हि योग्यसङ्गमः'

× ×

'जीवन्तमेव [4]कुष्णाति काकीव कुकुटुम्बिनी'

× ×

'जनानने कः कर मर्पयिष्यति'

× ×

'ज्ञानमार्गे ह्यहङ्कारः [5]परिधो दुरतिक्रमः'

---

१ कृपणानाम् । २ सुन्दरः । ३ इन्द्रधनुषा भूषितः । ४ उपद्रवति ।
५ परिघातः, अवरोध इति भावः ।

'जलविन्दुनिपातेन क्रमशः पूर्यते घटः'

× ×

'ज्ञातसारोपि खल्वेकः सन्दिग्घेकार्यवस्तुनि'

× ×

'जितरोषरया महाधियः, सपदि क्रोधजितो लघुर्जनः'

× ×

'तेजसां हि न वयः समीक्ष्यते'

× ×

'तत्तस्य किमपि द्रव्यं, योहि यस्य प्रियो जनः'

× ×

'तातस्य कूपोऽय मिति ब्रुवाणाः, क्षारंजलं कापुरुषाः पिबन्ति'

× ×

'द्विषन्मुखेपि स्वदतेस्तुतिर्या, सैवप्रमाणं खलु योग्यतायाः'

× ×

'दुर्जया हि विषया विदुषापि'

× ×

'दर्दुरा यत्र वक्तार स्तत्र मौनंहि शोभनम्'

× ×

'दैवे निरुन्धति निवन्धनतां वहन्ति, हन्त प्रयासपरुषाणि न पौरुषाणि,

× ×

'धिगिमां देहभृता मसारताम्,

'निर्दोहधेनुमहिमा नहि किङ्किणीभिः'

× ×

"निरस्त पादपे देशे एरण्डोऽपि द्रुमायते"

× ×

'न पादयोन्मूलनशक्ति [1]रंहः, शिलोच्चये मूर्च्छति मारुतस्य'

× ×

'न ह्यङ्गितज्ञो ऽवसरे ऽवसीदति'

× ×

'ननुवक्तृविशेषनिःस्पृहा, गुण[2]गृह्या वचने विपश्चितः'

× ×

'निवसन्ति पराक्रमाश्रया, न विषादेन समं समृद्धयः'

× ×

'न हि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः'

× ×

'न ति[3]तिक्षासममस्ति साधनम्'

× ×

'न काचस्य कृते जातु युक्ता चिन्तामणेः क्षतिः'

× ×

'नष्टं मृत मतिक्रान्तं नानुशोचन्ति पण्डिताः'

---

१ वेगः । २ गुणपक्षपातिनः । ३ शान्तिः ।

'नक्रः स्वस्थान मासाद्य गजेन्द्र मपि कर्षति'

\+ +

'निर्वाते ज्वलितो दीपः स्वयमेव प्रशाम्यति'

\+ +

'न नश्यति तमो नाम कृतया दीपवार्त्तया'

\+ +

'नहि कृत मुपकारं साधवो विस्मरन्ति'

\+ +

'नास्ति व्यसनिनां किञ्चिद्भुवि पर्याप्तये धनम्'

\+ +

'निःसारस्य पदार्थस्य प्रायेणाडम्बरो महान्'

\+ +

'नवे हि [1]भाजने लग्नः संस्कारो नान्यथा भवेत्'

\+ +

'न व्यापारशतेनापि शुकवत् पाठ्यते वकः'

\+ +

'ना धर्म श्चिर मेधते'

\+ +

'पवनः परागवाही रथ्यासु वहन् [2]रजस्वलो भवति'

---

१ पात्रे । २ धूलिधूसरः ।

'पाणौ[1] पयसा दग्धे तक्रं फूत्कृत्य पामरः पिवति'

× ×

'प्राणेभ्यो पि हि धीराणां प्रिया शत्रुप्रतिक्रिया'

× ×

"प्रायः शुभञ्च विदधा त्यशुभञ्च जन्तोः
सर्वङ्कषा[2] भगवतो भवितव्यतैव"

× ×

'प्रयोजन मनुद्दिश्य न मन्दोपि प्रवर्त्तते'

× ×

'प्रक्षालना द्धि पङ्कस्य दूरा दस्पर्शनं वरम्'

× ×

'पङ्को हि नभसि[3] क्षिप्तः क्षेप्तुः पतति मूर्द्धनि'

× ×

'प्रेत्यास्मि कीदृग्भवितेति चिन्ता, सन्तापमन्तस्तनुते हि जन्तोः'

× ×

'परैरपर्या[4] सितवीर्यसम्पदां, पराभवोऽप्युत्सव एव मानिनाम्'

× ×

'प्रेम पश्यति भया न्यपदे[5]पि'

---

१ हस्ते। २ सर्वाधिकबला। ३ आकाशे। ४ अनभिभूतानामितिभावः।
५ अस्थानेपि।

'प्रायेण सामग्र्यविधौ गुणानां पराङ्मुखी विश्वसृजः प्रवृत्तिः'

× ×

'प्रायः [1]प्रत्यय माधत्ते स्वगुणेषूत्तमादरः'

× ×

'प्रतिकारविधान मायुषः सति शेषे हि फलाय कल्पते'

× ×

'पर्यायपीतस्य सुरै र्हिमांशोः, कलाक्षयः श्लाघ्यतरो हि वृद्धेः'

× ×

'पदं हि सर्वत्र गुणै र्निधीयते'

× ×

'ब्रवते हि फलेन साधवो, नतु कण्ठेन निजोपयोगिताम्'

× ×

'व्रजन्ति ते मूढ़धियः पराभवं, भवन्ति मायाविषु ये न मायिनः'

× ×

'बद्धमूलस्य मूलं हि मह द्वैरतरोः स्त्रियः'

× ×

'बृहत्सहायः कार्यान्तं [2]क्षोदीया नपि गच्छति'

× ×

'भावो वेशो भाषा भूषा, यै र्न रक्षितास्ते कुलदूषाः'

---

१ विश्वासम् । २ अतिक्षुद्रः ।

'भक्ष्यमाणो निरुदयः सुमेरु रपि हीयते'

\+ +

'भिन्नश्लिष्टा तु या प्रीति र्न सा स्नेहेन वर्द्धते'

\+ +

'भवन्ति भव्येषु हि पक्षपाताः'

\+ +

'भिन्नरुचि र्हि लोकः'

\+ +

'मा जीवन्यः परावज्ञादुःखदग्धो पि जीवति'

\+ +

'महीयांसः प्रकृत्या मितभाषिणः'

\+ +

'मितं च सारं च वचो हि वाग्मिता'

\+ +

'महान् महत्येव करोति विक्रमम्'

\+ +

'याच्ञा [1]मोघा वरमधिगुणे नाधमे [2]लब्धकामा'

\+ +

'यो यद्वपति बीजं हि लभते सोपि तत्फलम्'

---

१ विफला । २ सफला ।

'यद्भविष्यो विनश्यति'

× ×

'यस्मिन् कुले त्व मुत्पन्नो गज स्तत्र न हन्यते'

× ×

'रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय'

× ×

'वता श्रितानुरोधेन किन्न कुर्वन्ति साधवः'

× ×

'वक्ति जन्मान्तरप्रीतिं मनः स्निह्य दकारणम्'

× ×

'विचित्ररूपाः खलु चित्रवृत्तयः'

× ×

'विकारहेतौ सति विक्रियन्ते, येषां न चेतांसि त एव धीराः'

× ×

'विमलं कलुषी-भवच्च चेतः, कथयत्येव हितैषिणं रिपुं वा'

× ×

'विनायकं प्रकुर्वाणो रचयामास वानरम्'

× ×

'[1]श्रेयसि केन तृप्यते'

× ×

'श्रेयांसि वहुविघ्नानि'

---

१ मिष्ट मिष्ट न्न कस्य ? इत्यप्यनेन स्मार्यते।

'सेवा धर्मः परम गहनो योगिना मप्य गम्यः'

× ×

'सधीरो यो न सम्मोह मापत्कालेपि गच्छति'

× ×

'सम्भावितस्य चाकीर्त्ति[1]र्मरणा दति रिच्यते'

× ×

'समानशीलव्यसनेषु सख्यम्'

× ×

'सहैव दशभिःपुत्रै र्भारं वहति गर्दभी'

× ×

'सदा भिमानैक धना हि मानिनः

+ +

'सर्वः स्वार्थं समीहते'

+ +

'समय एव करोति वलावलम्'

+ +

'[2]सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः'

+ +

'सा लक्ष्मी रुपकुरुते यया परेषाम्'

---

१ अधिका । २ एकत्रस्थितिः ।

'सहसा विदधीत न क्रिया मविवेकः पर मापदां पदम्'

× ×

'हेम्नः संलक्ष्यते वह्नौ विशुद्धिः श्यामिकापि वा'

× ×

'हितं मनोहारि च दुर्लभं वचः'

× ×

'हिमवति दिव्यौषधयः शीर्षे सर्पः क्रुधाविष्टः'

# 'अन्योक्ति मणि मञ्जूषा'

× 'तस्यैवाभ्युदयो भूया द्भानो यस्योदये सति ।
विकासभाजो जायन्ते गुणिनः कमलाकराः' ॥

× ×

'निशाचरोपि दीनोपि सकलङ्कोपि सर्वदा ।
चकोरीनयनद्वन्द्व मानन्दयति चन्द्रमाः' ॥

+ +

'अधः करोषि रत्नानि मूर्द्ध्ना धारयसे तृणम् ।
दोष स्तवैष जलधे रत्नं रत्नं तृणं तृणम्' ॥

× अत्रा कारादिक्रमो ना नुसृतः ।

'नाभिषेको नसंस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता' ॥

× ×

'सन्ति कूपाः स्फुरद्रूपाः सरितः सागरास्तथा ।
तथापि चातकस्यैकः फलदो जलदोदयः' ॥

× ×

'न वारयामो भवतीं विशन्तीं
वर्षानदि, स्त्रोतसि [1]जह्नुजायाः ।
न युक्त मेतत्तु पुरो यदस्या-
स्तरङ्गभङ्गान् प्रकटीकरोषि' ॥

× ×

भ्रम भ्रमर ! यूथीषु मालती श्चापि लालय ।
मा पुनः पङ्कजारण्य-स्नेहशून्यं मनः कृथाः' ॥

× ×

'अपि [2]दलन्मुकुले वकुले यया
पद मधायि कदापि न तृष्णया ।
अहह !! सा सहसा विधुरे विधौ
मधुकरी बदरी मनुवर्त्तते' ॥

---

१ गङ्गायाः । २ विकसिते ।

'भुक्ता मृणालपटली, भवता निपीना-
न्यम्बूनि, यत्र नलिनानि निषेवितानि ।
रे राजहंस, वद, तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ? ॥

\+ +

'स्वस्त्यस्तु विद्रुमवनाय, नमो मणिभ्यः,
कल्याणिनो भवतु मौक्तिकशुक्तिमाला ।
प्राप्तं मया सकल मेव फलं पयोधे,
यद्वारुणै र्जलचरै र्न विदारितोस्मि' ॥

\+ +

किन्तेन हेमगिरिणा रजताद्रिणा वा ?
यत्राश्रितास्तु तरव स्तरवस्त एव ।
मन्यामहे मलय मेव यदाश्रयेण,
शाखोट-निम्ब-कुटजा अपि चन्दनानि' ॥

\+ +

'माऽशोक, शोकं भज पुष्प लक्ष्मीः
कालेऽप्यरूढ़प्रणया मयोति ।
भावी यतोऽन्यद्रुमदुर्लभस्ते.
वधू-रणन्नूपुर-पाद-घातः' ॥

'[1]दानार्थिनो मधुकरा यदि कर्णतालै-
दूरीकृताः करिवरेण मदान्धबुद्धया ।
तस्यैव गण्डयुगमण्डनहानि रेषा
भृङ्गाः पुन र्विकचपद्मवने वसन्ति' ॥

\+ +

'छेद श्चन्दनचूतचम्पकवने, रक्षा करीरद्रुमे,
हिंसा हंसमयूरकोकिलकुले, काकेषु नित्यादरः ।
मातङ्गेन खरक्रयः, समतुला कर्पूरकार्पासयो-
रेषा यत्र विचारणा गुणिगणे, देशाय तस्मैनमः ॥

× ×

लोकानन्दन, चन्दनद्रुम, सखे, नास्मिन्वने स्थीयतां
[2]दुर्वंशौ परुषै रसारहृदयै राक्रान्त मेतद्वनम् ।
ते ह्यन्योन्यनिघर्षजातदहनज्वालावलीसंकुला
न स्वान्येव कुलानि केवल महो सर्वं दहेयु र्वनम्' ॥

× ×

'[3]निसर्गा दारामे तरुकुलसमारोपसुकृती
कृती मालाकारो वकुल मपि कुत्रापि निदधे ।
इदं को जानीते यदय मिह कोणान्तरगतो
जगज्जालं कर्त्ता कुसुमभर-सौरभ्य-भरितम्' ॥

---

१ हस्तिमदः । २ अकुलीनैः, कुत्सितैर्वंशैश्च । ३ उपवने ।

'इयत्यां सम्पत्तावपि च सलिलाना न्त्व मधुना
न तृष्णा मार्त्तानां हरसि यदि कासार, सहसा ।
निदाघे चण्डांशौ किरति परितो ङ्गारनिकरं-
कृशीभूतः केषा महह परिहर्त्तासि खलुताम्' ? ॥

× ×

'इयं पल्ली भिल्लै रनुचितसमारम्भरसिकै-
स्समन्ता दाक्रान्ता विषविषमबाणप्रणयिभिः ।
तरो रस्य स्कन्धे गमय समयं कीर, निभृतं-
न वाणी कल्याणी तदिह मुखमुद्रैव शरणम्' ॥

× ×

'त्यक्तो विन्ध्य-गिरिः पिता, भगवती मातेव रेवानदी
ते ते स्नेहनिबन्धबन्धुरधिय स्तुल्योदया दन्तिनः ।
त्वल्लोभा न्ननु दन्तिनि, स्वय मिदं बन्धाय दत्तं वपुः-
स्तवं दूरे ध्रियसे लुठन्ति च शिरः पीठे कठोराङ्कुशाः' ॥

× ×

'यत्पल्लवः ममभव त्कुसुमं यदासी-
त्तत्सर्व मस्य भवतः पयसः प्रसादः ।
यद्भूरुहे फलविधौ न ददासि वारि,
प्राचीन मम्बुद, यशो मलिनीकरोषि' ॥

'ताव [1]च्चकोरचरणायुधचक्रवाक-
पारावतादि-विहगाः कल मालपन्तु ।
यावद्वसन्तरजनी-घटिकावसान-
मासाद्य कोकिलयुवा न कुहूंकरोति' ॥

× ×

'पुरा सरसि मानसे विकचसारस्खिलत्-
परागसुरभीकृते पयसि यस्य यातं वयः ;
स पल्वलजलेऽधुना मिलदनेकभेकाकुले
मरालकुलनायकः कथय रे कथं वर्त्तताम्' ? ॥

× ×

याते मय्यचिरा [2]न्निदाघमिहिरज्वालाशतैः शुष्कतां-
गन्ता कम्प्रति पान्थसन्तति रसौ सन्तापमालकुला।।
इत्थं यस्य निरन्तराधिपटलै र्नित्यं वपुः क्षीयते
धन्यं जीवन मस्य मार्गसरसो, धिग्वारिधीनां जनुः' ॥

※ इति पं०रामचन्द्रमिश्रसङ्कलिता सूक्तिमुक्तावली समाप्ता ※

---

१ कुक्कुटः । २

# सूक्तिमुक्तावलीसङ्ग्रहीतुः

त्रिपाठिनैव प्रकाश्यमानाः कतिपये ग्रन्थाः ।

## १—आर्यारत्नमाला

निजनिर्मितानां सरसानां स्फूर्तिप्रदानां विभिन्न-विषयकार्याच्छन्दसां लघुकायः सङ्ग्रहः । पुस्तकमिदं दृष्ट्वा कामप्यनिर्वचनीयां तृप्तिं लभेरन् सुधियः । संस्कृते नवं वस्तु, परमद्भुता रमणीयता ।

मूल्यम् ।०)

## २—सिद्धान्तकौमुदी-मर्मप्रकाशः

(१ मः कारकान्तो भागः)

उपरि साधीयस्यक्षरे सिद्धान्तकौमुदी, तदधश्च सिद्धान्त—कौमुदयन्तः पतितानां फक्किकानां साधुतरं व्याख्याः, प्रयोगाणां साधनप्रक्रिया, सूत्रार्थग्रन्थिभेदनम्, इत्यादिका विषयाः समावेश्यन्ते । छात्राणामुपकारमेव मनसि निधाय प्रारब्धोऽयं प्रकाशनविधिरिति सर्वत्र सारल्यम् । इदमेव क्रीतं पुस्तकं सिद्धान्तकौमुदी, तत्त्वबोधिनी, शिवदत्ती, फक्किकारत्नमञ्जूषा, सरलार्थ प्रभृतीनां नाना-पुस्तकानां कार्याणि कुर्यात् । मूल्यम् १॥०)

## ३—मन्दार

पं० रामचन्द्रमिश्रजी की माधुरी, कल्याण, जागृति, प्रभृति हिन्दी पत्रों में प्रकाशित तथा कुछ नवीनतम कविताओं का सुन्दर सङ्ग्रह । मूल्य ।०)

व्यवस्थापकः

महालक्ष्मी ग्रन्थमाला कार्यालय,

सिवान

छपरा ।